॥ अथ जितंते स्तोत्रे प्रथमोऽध्यायः ॥

ब्रह्मोवाच

जितं ते पुंडरीकाक्ष पूर्णषागुण्यविग्रह ।

परानंद परब्रह्मन् नमस्ते चतुरात्मने ॥१॥

नमस्ते पीतवसन नमः कटकहारिणे ।

नमो नीलालकाबद्ध वेणीसुंदरपुंगव ॥२॥

स्फुरद्वलयकेयूरनूपुरांगदभूषणैः ।

शोभनैर्भूषिताकार कल्याणगुणराशये ॥३॥

करुणापूर्णहृदय शंखचक्रगदाधर ।

अमृतानंदपूर्णाभ्यां लोचनाभ्यां विलोकय ॥४॥

कृशं कृतघ्नं दुष्कर्मकारिणं पापभाजनम् ।

अपराधसहस्राणां आकरं करुणाकर ॥५॥

कृपया मां केवलया गृहाण मथुराधिप ।

विषयार्णवमग्नं मामुद्धर्तुं त्वमिहार्हसि ॥६॥

पिता माता सुहृद्बंधुर्भ्राता पुत्रस्त्वमेव मे ।
विद्या धनं च कामश्च नान्यत् किंचित् त्वया विना ॥७॥

यत्र कुत्र स्थले वासो येषु केषु भवोऽस्तु मे ।
तव दास्यैकभावे स्यात् सदा सर्वत्र मे रतिः ॥८॥

मनसा कर्मणा वाचा शिरसा वा कथंचन ।
त्वां विना नान्यमुद्दिश्य करिष्ये किंचिदप्यहम् ॥९॥

पाहि पाहि जगन्नाथ कृपया भक्तवत्सल ।
अनाथोऽहमधन्योऽहमकृतार्थो ह्यकिंचनः ॥१०॥

नृशंसः पापकृत् क्रूरो वंचको निष्ठुरः सदा ।
भवार्णवे निमग्नं मामनन्यकरुणोदधे ॥११॥

करुणापूर्णदृष्टिभ्यां दीनं मामवलोकय ।
त्वदग्रे पतितं त्यक्तुं तावकं नार्हसि प्रभो ॥१२॥

मया कृतानि पापानि विविधानि पुनः पुनः ।
त्वत्पादपंकजं प्राप्तुं नान्यत् त्वत्करुणां विना ॥१३॥

साधनानि प्रसिद्धानि यागादीन्यब्जलोचन ।
त्वदाज्ञया प्रवृत्तानि त्वामुद्दिश्य कृतानि वै ॥१४॥

भक्त्यैकलभ्यः पुरुषोत्तमो हि
जगत्प्रसूतिस्थितिनाशहेतुः ।
अकिंचनं नान्यगतिं शरण्य
गृहाण मां क्लेशिनमंबुजाक्ष ॥

धर्मार्थकाममोक्षेषु नेच्छा मम कदाचन ।
त्वत्पादपंकजस्याधो जीवितं मम दीयताम् ॥१६॥

कामये तावकत्वेन परिचर्यासु वर्तनम् ।
नित्यं किंकरभावेन परिगृह्णीष्व मां विभो ॥१७॥

लोकं वैकुंठनामानं दिव्यं षागुण्यसंयुतम् ।
अवैष्णवानामप्राप्यं गुणत्रयविवर्जितम् ॥१८॥

नित्यं सिद्धैः समाकीर्णं त्वन्मयैः पांचकालिकैः ।
सभाप्रासादसंयुक्तं वनैश्चोपवनैः शुभैः ॥१९॥

वापीकूपतटाकैश्च वृक्षषंडैश्च मंडितम् ।
अप्राकृतं सुरैर्वंद्यमयुताकसमप्रभम् ॥२०॥

प्रकृष्टसत्त्वराशिं त्वां कदा द्रक्ष्यामि चक्षुषा ।
क्रीडंतं रमया सार्धं लीलाभूमिषु केशवम् ॥२१॥

मेघश्यामं विशालाक्षं कदा द्रक्ष्यामि चक्षुषा ।
उन्नसं चारुदशनं बिंबोष्ठं शोभनाननम् ॥२२॥

विशालवक्षसं श्रीशं कंबुग्रीवं जगद्गुरुम् ।
आजानुबाहुपरिघमुन्नतांसं मधुद्विषम् ॥२३॥

तनूदरं निम्ननाभिमापीनजघनं हरिम् ।
करभोरुं श्रियःकांतं कदा द्रक्ष्यामि चक्षुषा ॥२४॥

शंखचक्रगदापद्मैरंकितं पादपंकजम् ।
शरच्चंद्रशताक्रांतनखराजिविराजितम् ॥२५॥

सुरासुरैर्वंद्यमानमृषिभिर्वंदितं सदा ।
मूर्धानं मामकं देव तावकं मंडयिष्यति ॥२६॥

कदा गंभीरया वाचा श्रिया युक्तो जगत्पतिः ।
चामरव्यग्रहस्तं मामेवं कुर्विति वक्ष्यति ॥२७॥

कदाऽहं राजराजेन गणनाथेन चोदितः ।
चरेयं भगवत्पादपरिचर्यासु वर्तनम् ॥२८॥

शांताय सुविशुद्धाय तेजसे परमात्मने ।
नमः सर्वगुणातीतषाड्गुण्यायादिवेधसे ॥२९॥

सत्यज्ञानानंतगुणब्रह्मणे चतुरात्मने ।
नमो भगवते तुभ्यं वासुदेवामितद्युते ॥३०॥

चतुःपंचनवव्यूहदशद्वादशमूर्तये ।
नमोऽनंताय विश्वाय विश्वातीताय चक्रिणे ॥३१॥

नमस्ते पंचकालज्ञ पंचकालपरायण ।
पंचकालैकमनसां त्वमेव गतिरव्ययः ॥३२॥

स्वमहिम्नि स्थितं देवं निरनिष्टं निरंजनम् ।
अप्रमेयमजं विष्णुं शरणं त्वां गतोऽस्म्यहम् ॥३३॥

वागतीतं परं शांतं कंजनाभं सुरेश्वरम् ।
तुरीयाद्यतिरक्तं त्वां कौस्तुभोद्भासिवक्षसम् ॥३४॥

विश्वरूपं विशालाक्षं कदा द्रक्ष्यामि चक्षुषा ।
मोक्षं सालोक्यसारूप्यं प्रार्थये न कदाचन ॥३५॥

इच्छाम्यहं महाभाग कारुण्यं तव सुव्रत ।
सकलावरणातीत किंकरोऽस्मि तवानघ ॥३६॥

पुनः पुनः किंकरोऽस्मि तवाहं पुरुषोत्तम ।
आसनाद्यनुयागांतमर्चनं यन्मया कृतम् ॥३७॥

भोगहीनं क्रियाहीनं मंत्रहीनमभक्तिकम् ।
तत्सर्वं क्षम्यतां देव दीनं मामत्मसात् कुरु ॥३८॥

इति स्तोत्रेण देवेशं स्तुत्वा मधुनिघातिनम् ।
यागावसानसमये देवदेवस्य चक्रिणः ।
नित्यं किंकरभावेन स्वात्मानं विनिवेदयेत् ॥३९॥

॥ इति जितंतेस्तोत्रे प्रथमोऽध्यायः ॥

**॥ अथ जितंते स्तोत्रे द्वितीयोऽध्यायः ॥**

जितं ते पुंडरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषिकेश महापुरुषपूर्वज ॥१॥

विज्ञापनमिदं देव शृणुष्व पुरुषोत्तम ।
नरनारायणाभ्यां च श्वेतद्वीपनिवासिभिः ॥२॥

नारदाद्यैर्मुनिगणैः सनकाद्यैश्च योगिभिः ।
ब्रह्मेशाद्यैः सुरगणैः पंचकालपरायणैः ॥३॥

पूज्यसे पुंडरीकाक्ष दिव्यैर्मंत्रैर्महात्मभिः ।
पाषंडधर्मसंकीणे भगवद्भक्तिवर्जिते ॥४॥

कलौ जातोऽस्मि देवेश सर्वधर्मबहिष्कृते ।
कथं त्वामसमा(दा)चारः पापप्रसवभूरुहः ॥५॥

अर्चयामि दयासिंधो पाहि मां शरणागतम् ।
तापत्रयदवाग्नौ मां दह्यमानं सदा विभो ॥६॥

पाहि मां पुंडरीकाक्ष केवलं कृपया तव ।
जन्ममृत्युजराव्याधिदुःखसंतप्तदेहिनम् ॥७॥

पालयाशु दृशा देव तव कारुण्यगर्भया ।
इंद्रियाणि मया जेतुमशक्यं पुरुषोत्तम ॥८॥

शरीरं मम देवेश व्याधिभिः परिपीडितम् ।
मनो मे पुंडरीकाक्ष विषयानेव धावति ॥९॥

वाणी मम हृषिकेश मिथ्यापारुष्यदूषिता ।
एवं साधनहीनोऽहं किं करिष्यामि केशव
रक्ष मां कृपया कृष्ण भवाब्धौ पतितं सदा ॥१०॥

अपराधसहस्राणां सहस्रमयुतं तथा ।
अर्बुदं चाप्यसंख्येयं करुणाब्धे क्षमस्व मे ॥११॥

यं चापराधं कृतवान् अज्ञानात् पुरुषोत्तम ।
अज्ञस्य मम देवेश तत् सर्वं क्षंतुमर्हसि ॥१२॥

अज्ञत्वादल्पशक्तित्वादालस्याद्दुष्टभावनात् ।
कृतापराधं कृपणं क्षंतुमर्हसि मां विभो ॥१३॥

अपराधसहस्राणि क्रियंतेऽहर्निशं मया ।
तानि सर्वाणि मे देव क्षमस्व मधुसूदन ॥१४॥

यज्जन्मनः प्रभृति मोहवशं गतेन
नानापराधशतमाचरितं मया ते ।
अंतर्बहिश्च सकलं तव पश्यतो हि
क्षंतुं त्वमर्हसि हरे करुणावशेन ॥१५॥

कर्मणा मनसा वाचा या चेष्टा मम नित्यशः ।
केशवाराधने सा स्याज्जन्मजन्मांतरेष्वपि ॥१६॥

॥ इति जितंते स्तोत्रे द्वितीयोऽध्यायः ॥

**॥ अथ जितंते स्तोत्रे तृतीयोऽध्यायः ॥**

जितं ते पुंडरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज ॥१॥

नमस्ते वासुदेवाय शांतानंदचिदात्मने ।
अध्यक्षाय स्वतंत्राय निरपेक्षाय शाश्वते ॥२॥

अच्युतायाविकाराय तेजसां निधये नमः ।
क्लेशकर्माद्यसंस्पृष्टपूर्णषाड्गुण्यमूर्तये ॥३॥

त्रिभिर्ज्ञानबलैश्वर्यवीर्यशक्त्योजसां युगैः ।
त्रिगुणाय नमस्तेऽस्तु नमस्ते चतुरात्मने ॥४॥

प्रधानपुरुषेशाय नमस्ते पुरुषोत्तम ।
चतुःपंचनवव्यूहदशद्वादशमूर्तये ॥५॥

अनेकमूर्तये तुभ्यममूर्तायैकमूर्तये ।
नारायण नमस्तेऽस्तु पुंडरीकायतेक्षण ॥६॥

सुभ्रूललाट सुमुख सुस्मिताधरविद्रुम ।
पीनवृत्तायतभुज श्रीवत्सकृतभूषण ॥७॥

तनुमध्यमहावक्षः पद्मनाभ नमोऽस्तु ते ।
विलासविक्रमाक्रांतत्रैलोक्यचरणांबुज ॥८॥

नमस्ते पीतवसन स्फुरन्मकरकुंडल ।
स्फुरत्किरीटकेयूर नूपुरांगदभूषण ॥९॥

पंचायुध नमस्तेऽस्तु नमस्ते पांचकालिक ।
पंचकालरतानां त्वं योगक्षेमं वह प्रभो ॥१०॥

नित्यज्ञानबलैश्वर्यभोगोपकरणाच्युत ।
नमस्ते ब्रह्मरुद्रादिलोकयात्राप्रवर्तक ॥११॥

जन्मप्रभृति दासोऽस्मि शिष्योऽस्मि तनयोऽस्मि ते ।
त्वं च स्वामी गुरुर्माता पिता च मम बांधवः ॥१२॥

अयि त्वां भगवन् ब्रह्मशिवशक्रमहर्षयः ।
द्रष्टुं यष्टुमभिष्टोतुमद्यापीश नहीशते ॥१३॥

तापत्रयमहाग्राहभीषणे भवसागरे ।
मज्जतां नाथ नौरेषा प्रणतिस्तु त्वदर्पिता ॥१४॥

अनाथाय जगन्नाथ शरण्य शरणार्थिने ।
प्रसीद सीदते मह्यं मुह्यते भक्तवत्सल ॥१५॥

मंत्रहीनं क्रियाहिनं भक्तिहीनं यदर्चनम् ।
तत् क्षंतव्यं प्रपन्नानामपराधसहो ह्यसि ॥१६॥

सर्वेषु देशकालेषु सर्वावस्थासु चाच्युत ।
किंकरोऽस्मि हृषीकेश भूयो भूयोऽस्मि किंकरः ॥१७॥

एकत्रिचतुरत्यंतचेष्टायेष्टकृते सदा ।
व्यक्तषागुण्यतत्त्वाय चतुरात्मात्मने नमः ॥१८॥

कर्मणा मनसा वाचा या चेष्टा मम नित्यशः ।
केशवाराधने सा स्याज्जन्मजन्मांतरेष्वपि ॥१९॥

॥ इति जितंतेस्तोत्रे तृतीयोऽध्यायः ॥

## ॥ अथ जितंते स्तोत्रे चतुर्थोऽध्यायः ॥

जितं ते पुंडरीकाक्ष पूर्णषाड्गुण्यविग्रह ।
नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज ॥१॥

देवानां दानवानां च सामान्यमधिदैवतम् ।
सर्वदा चरणद्वंद्वं व्रजामि शरणं तव ॥२॥

एकस्त्वमस्य लोकस्य स्रष्टा संहारकस्तथा ।
अध्यक्षश्चानुमंता च गुणमायासमावृतः ॥३॥

संसारसागरं घोरमनंतक्लेशभाजनम् ।
त्वामेव शरणं प्राप्य निस्तरंति मनीषिणः ॥४॥

न ते रूपं न चाकारो नायुधानि न चास्पदम् ।
तथाऽपि पुरुषाकारो भक्तानां त्वं प्रकाशसे ॥५॥

नैव किंचित्परोक्षं ते प्रत्यक्षोऽसि न कस्यचित् ।
नैव किंचिदसिद्धं ते न च सिद्धोऽसि कर्हिचित् ॥६॥

कार्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम् ।
योगानां परमां सिद्धिं परमं ते पदं विदुः ॥७॥

अहं भीतोऽस्मि देवेश संसारेऽस्मिन् भयावहे ।
पाहि मां पुंडरीकाक्ष न जाने शरणं परम् ॥८॥

कालेष्वपि च सर्वेषु दिक्षु सर्वासु चाच्युत ।
शरीरे च गतौ चास्य वर्तते मे महद्भयम् ॥९॥

त्वत्पादकमलादन्यन्न मे जन्मांतरेष्वपि ।
निमित्तं कुशलस्यास्ति येन गच्छामि सद्गतिम् ॥१०॥

विज्ञानं यदिदं प्राप्तं यदिदं ज्ञानमूर्जितम् ।
जन्मांतरेऽपि देवेश मा भूदस्य परिक्षयः ॥११॥

दुर्गतावपि जातायां त्वद्गतो मे मनोरथः ।
यदि नाशं न विंदेत तावताऽस्मि कृती सदा ॥१२॥

न कामकलुषं चित्तं मम ते पादयोः स्थितम् ।
कामये वैष्णवत्वं च सर्वजन्मसु केवलम् ॥१३॥

अज्ञानाद्यदि वा ज्ञानादशुभं यत्कृतं मया ।
क्षंतुमर्हसि देवेश दास्येन च गृहाण माम् ॥१४॥

सर्वेषु देशकालेषु सर्वावस्थासु चाच्युत ।
किंकरोऽस्मि हृषीकेश भूयो भूयोऽस्मि किंकरः ॥१५॥

इत्येवमनया स्तुत्या स्तुत्वा देवं दिने दिने ।
किंकरोऽस्मीति चात्मानं देवाय विनिवेदयेत् ॥१६॥

मादृशो न परः पापी त्वादृशो न दयापरः ।
इति मत्वा जगन्नाथ रक्ष मां गरुडध्वज ॥१७॥

यच्चापराधं कृतवानज्ञानात् पुरुषोत्तम ।
अज्ञस्य मम देवेश तत्सर्वं क्षंतुमर्हसि ॥१८॥

अहंकारार्थकामेषु प्रीतिरद्यैव नश्यतु ।
त्वां प्रपन्नस्य मे सैव वर्धतां श्रीपते त्वयि ॥१९॥

क्वाहमत्यंतदुर्बुद्धिः क्व नु चात्महितेक्षणम् ।
यद्धितं मम देवेश तदाज्ञापय माधव ॥२०॥

सोऽहं ते देव देवेश नार्चनादौ स्तुतौ न च ।
सामर्थ्यवान् कृपामात्रमनोवृत्तिः प्रसीद मे ॥२१॥

उपचारापदेशेन क्रियंतेऽहर्निशं मया ।
अपचारानिमान् सर्वान् क्षमस्व पुरुषोत्तम ॥२२॥

न जाने कर्म यत्किंचिन्नापि लौकिकवैदिके ।
न निषेधविधी विष्णो तव दासोऽस्मि केवलम् ॥२३॥

स त्वं प्रसीद भगवन् कुरु मय्यनाथे
विष्णो कृपां परमकारुणिकः किल त्वम् ।
संसारसागरनिमग्नमनंतदीनम्
उद्धर्तुमर्हसि हरे पुरुषोत्तमोऽसि ॥२४॥

करचरणकृतं वा कायजं कर्मजं वा
श्रवणमननजं वा मानसं वाऽपराधम् ।
विहितमविहितं वा सर्वमेतत् क्षमस्व
जय जय करुणाब्धे श्रीपते श्रीमुकुंद ॥२५॥

कर्मणा मनसा वाचा या चेष्टा मम नित्यशः ।
केशवाराधने सा स्याज्जन्मजन्मांतरेष्वपि ॥२६॥

॥ इति जितंतेस्तोत्रे चतुर्थोऽध्यायः ॥

**॥ अथ जितंते स्तोत्रे पंचमोऽध्यायः ॥**

जितं ते पुंडरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज ॥१॥

नमस्ते वासुदेवाय शांतानंदचिदात्मने ।
अजिताय नमस्तुभ्यं षागुण्यनिधये नमः ॥२॥

अध्यक्षाय स्वतंत्राय निरपेक्षाय शाश्वते ।
महाविभूतिसंस्थाय नमस्ते पुरुषोत्तम ॥३॥

सहस्रशिरसे तुभ्यं सहस्रचरणाय ते ।
सहस्रबाहवे तुभ्यं सहस्रनयनाय ते ॥४॥

प्रधानपुरुषेशाय नमस्ते पुरुषोत्तम ।
अमूर्तये नमस्तुभ्यमेकमूर्ताय ते नमः ॥५॥

अनेकमूर्तये तुभ्यमक्षराय च ते नमः ।
व्यापिने वेदवेद्याय नमस्ते परमात्मने ॥६॥

चिन्मात्ररूपिणे तुभ्यं नमस्तुर्यादिमूर्तये ।
अणिष्ठाय स्थविष्ठाय महिष्ठाय च ते नमः ॥७॥

वरिष्ठाय वसिष्ठाय कनिष्ठाय नमो नमः ।
नेदिष्ठाय यविष्ठाय क्षेपिष्ठाय च ते नमः ॥८॥

पंचात्मने नमस्तुभ्यं सर्वांतर्यामिणे नमः ।
कलाषोडशरूपाय सृष्टिस्थित्यंतहेतवे ॥९॥

नमस्ते गुणरूपाय गुणरूपानुवर्तिने ।
व्यस्ताय च समस्ताय समस्तव्यस्तरूपिणे ॥१०॥

लोकयात्राप्रसिद्ध्यर्थं सृष्टब्रह्मादिरूपिणे ।
नमस्तुभ्यं नृसिंहादिमूर्तिभेदाय विष्णवे ॥११॥

आदिमध्यांतशून्याय तत्त्वज्ञाय नमो नमः ।
प्रणवप्रतिपाद्याय नमः प्रणवरूपिणे ॥१२॥

विपाकैः कर्मभिः क्लेशैरस्पृष्टवपुषे नमः ।
नमो ब्रह्मण्यदेवाय तेजसां निधये नमः ॥१३॥

नित्यासाधारणानेकलोकरक्षापरिच्छदे ।
सच्चिदानंदरूपाय वरेण्याय नमो नमः ॥१४॥

यजमानाय यज्ञाय यष्टव्याय नमो नमः ।
इज्याफलात्मने तुभ्यं नमः स्वाध्यायशालिने ॥१५॥

नमः परमहंसाय नमः सत्त्वगुणाय ते ।
स्थिताय परमे व्योम्नि भूयो भूयो नमो नमः ॥१६॥

हरिर्देहभृतामात्मा परप्रकृतिरीश्वरः ।
त्वत्पादमूलं शरणं यतः क्षेमो नृणामिह ॥१७॥

संसारसागरे घोरे विषयावर्तसंकुले ।
अपारे दुस्तरेऽगाधे पतितं कर्मभिः स्वकैः ॥१८॥

अनाथमगतिं भीरुं दयया परया हरे ।
मामुद्धर दयासिंधो सिंधोरस्मात् सुदुस्तरात् ॥१९॥

मंत्रहीनं क्रियाहीनं भक्तिहीनं यदर्चितम् ।
तत् क्षंतव्यं प्रपन्नानामपराधसहो ह्यसि ॥२०॥

अपराधसहस्रभाजनं पतितं भीमभवार्णवोदरे ।
अगतिं शरणागतं हरे कृपया केवलमात्मसात् कुरु ॥२१॥

जन्मप्रभृति दासोऽस्मि शिष्योऽस्मि तनयोऽस्मि ते ।
त्वं च स्वामी गुरुर्माता पिता च मम बांधवः ॥२२॥

नाहं हि त्वा प्रजानामि त्वां भजाम्येव केवलम् ।
बुद्ध्वैवं मम गोविंद मुक्त्युपायेन मां हरे ॥२३॥

त्वमेव यच्छ मे श्रेयो नियमेऽपि दमेऽपि च ।
बुद्धियोगं च मे देहि येन त्वामुपयाम्यहम् ॥२४॥

प्रियो मे त्वां विना नान्यो नेदं नेदमितीति च ।
बुद्धिं नीतिं च मे देहि येन त्वामुपयाम्यहम् ॥२५॥

इति विज्ञाप्य देवेशं वैश्वदेवं स्वधामनि ।
कुर्यात् पंचमहायज्ञानपि गृह्योक्तवर्त्मना ॥२६॥

इत्यादिसमये तस्य प्रोवाच कमलासनः ।
वेदानां सारमुद्धृत्य सर्वागमसमृद्धये ॥२७॥

॥ इति जितंतेस्तोत्रे पंचमोऽध्यायः ॥

**॥ इति श्रीपंचरात्रागमे महोपनिषदि ब्रह्मतंत्रे श्रीमदष्टाक्षरकल्पे हंस–ब्रह्मसंवादे जितंतेस्तोत्रम् ॥**

************